उभये । हवन्ते । प्रेति । सम्राजमिति सम्—राजम् । प्रथमम् । अध्वराणाम् । ( ३ ) अꣳहोमुचमित्यꣳहः—मुचम् । वृषभम् । यज्ञियानाम् । अपाम् । नपातम् । अश्विना । हयन्तम् । अस्मिन् । नरः । इन्द्रियम् । धत्तम् । ओजः । वीति । नः । इन्द्र । मृधः । जहि । नीचा । यच्छ । पृतन्यतः । अधस्पदमित्यधः—पदम् । तम् । ईम् । कृधि । यः । अस्मान् । अभिदासतीत्यभि—दासति । इन्द्र । क्षत्रम् । अभीति । वामम् । ओजः । अजायथाः । वृषभ । चर्षणीनाम् । अपेति । अनुदः । जनम् । अमित्रयन्तमित्यमित्र—यन्तम् । उरुम् । देवेभ्यः । अकृणोः । उ । लोकम् । मृगः । न । भीमः । कुचरः । गिरिष्ठा इति गिरि—स्थाः । परावत इति परा—वतः । ( ४ ) एति । जगाम । परस्याः । सृकम् । सꣳशायेति सं—शाय । पविम् । इन्द्र । तिग्मम् । वीति । शत्रून् । ताढि । वीति । मृधः । नुदस्व । वीति । शत्रून् । वीति । मृधः । नुद । वीति । वृत्रस्य । हनू इति । रुज । वीति । मन्युम् । इन्द्र । भामितः । अमित्रस्य । अभिदासत इत्यभि—दासतः । त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् । हवेहव इति

( याज्यापुरोनुवाक्याभिधानम् )

हवे—हवे। सुहवमिति सु—हवम्। शूरम्। इन्द्रम्। हुवे। नु। शक्रम्। पुरुहूतमिति पुरु—हूतम्। इन्द्रम्। स्वस्ति। नः। मघवेति मघ—वा। धातु। इन्द्रः। मा। ते। अस्याम्। ( ५ ) महमावन्निति सहमा—वन्। परिष्टौ। अघायं। भूम। हरिव इति हरि—वः। परादा इति परा—दै। त्रायस्व। नः। अवृकेभिः। वरूथैः। तवं। प्रियासः। सूरिषु। स्याम। अनवः। ते। रथम्। अश्वाय। तक्षन्। त्वष्टा। वज्रम्। पुरुहूतेति पुरु—हूत। द्युमन्तमिति द्यु—मन्तम्। ब्रह्माणः। इन्द्रम्। महयन्तः। अर्कैः। अवर्धयन्। अहये। हन्तवै। उ। वृष्णे। यत्। ते। वृषणः। अर्कम्। अर्चान्। इन्द्रं। ग्रावाणः। अदितिः। सजोषा इति स—जोषाः। अनश्वासः। ये। पवयः। अरथाः। इन्द्रेषिता इतीन्द्र—इषिताः। अभ्यवर्तन्तेत्यभि—अवर्तन्त। दस्यून् ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके षष्ठप्रपाठकः समाप्तः ॥

( अथ प्रथमकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः । )

---

सप्तमादिष्वेकादशान्तेषु पञ्चस्वनुवाकेषु याजमानब्राह्मणप्रसङ्गादाध्वर्यवब्राह्मणमपि कियदभिहितम् । द्वादशानुवाके याज्या [ पुरोनुवाक्या ] उच्यन्ते । काम्येष्टिकाण्डे सप्तमानुवाके काचिदिष्टिरेवमाम्नायते—

" ऐन्द्रं चरुं निर्वपेत्पशुकाम ऐन्द्रा वै पशव इन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून्प्र यच्छति पशुमानेव भवति " [ सं० का० २ प्र० २ अ० ७ ] इति ।

पशूनामैन्द्रत्वमर्थवादान्तरे द्रष्टव्यम् ॥

पुरोडाशादिपरित्यागेन चरुविधानं प्रशंसति—

" चरुर्भवति स्वादेवास्मै योनेः पशून्प्र जनयति " [ सं० का० २ प्र० २ अ० ७ ] इति ।

वाजपेये हि नैवारं चरुमश्वानवघ्रापयेत् । अश्वमेधेऽपि लाजीनित्यादिमन्त्रेणाश्वायान्नमुपावहरन्ति । तच्च भक्षितमन्नमुत्पत्स्यमानानामश्वानां रेतोरूपेण बीजमित्यभिप्रेत्य चरोः पशुयोनित्वमत्राभिधीयते ॥

तस्या ऐन्द्रेष्टेः पुरोनुवाक्यामाह—

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः, इति ।

हे ऋत्विग्यजमाना वो युष्माकं जनेभ्यः पुत्रभृत्यादिजनसिद्ध्यर्थं विश्वतस्परि सर्वस्य जगत उपरि स्थितमुत्कृष्टत्वेन वर्तमानमिन्द्रं हवामह आह्वयामः । स चेन्द्रोऽस्माकं केवलोऽस्त्वसाधारणोऽस्तु । इतरयजमानेभ्योऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः ॥

याज्यामाह—

इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः । शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः, इति ।

अग्निचयनमनुतिष्ठन्तो नर इन्द्रं नेमधिता वह्न्यादिभिर्देवैः सह नेमस्याधस्य हविषो धिता धारणाय हवन्त आह्वयन्ति । अत एव चयनब्राह्मणमेवमाम्नायते—" अर्धेन्द्राणि जुहोति" इति । तन्मन्त्राश्चैवमाम्नायन्ते—"अग्निश्च

---

१ क. घ. ङ. च. 'धेतेति । भ°। २ ख. 'रति । त°। ३ क. घ ङ. च. अस्य च°।

( याज्यापुरोनुवाक्याभिधानम् )

म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे " इत्यादयः। यद्यस्मात्कारणात्पार्याश्रितेऽ-
श्नावग्निष्टोमादिपारमर्हन्तो यजमानास्ता धियो युनजते युञ्जते तान्यग्निष्टोमादी-
न्यनुतिष्ठन्ति। तादृश हे इन्द्र त्वं शूरो रक्षोभिरनभिभूतो नृषाता मनुष्येभ्यः
सनिता धनस्य दाता शवसोऽस्मदीयस्य बलस्य चकानस्तर्पको[1] भूत्वा नोऽस्मा-
न्गोमति बहुगवादिपशुयुक्ते व्रजे संघ आभजाऽऽभिमुख्येन स्थापय ॥

इष्ट्यन्तरं विधत्ते—

"इन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालं निर्वपेत्पशुकाम इन्द्रियं वै पशव
इन्द्रमेवेन्द्रियावन्त९ स्वेन भागधेयेनोप धावति स एवास्मा इन्द्रियं पशून्प्र
यच्छति पशुमानेव भवति " [ सं० का० २ प्र० २ अ० ७ ] इति।

इन्द्रियं बलं प्रभूतमस्यास्तीतीन्द्रियावान्। क्षीरघृतादिद्वारेणेन्द्रियवृद्धिहे-
तुत्वात्पशूनामिन्द्रियत्वम्। इन्द्रियं पशून्। चेति समुच्चयेऽध्याहर्तव्यः॥

तस्यामिष्टौ पुरोनुवाक्यामाह—

इन्द्रियाणि शतक्रतो या ते जनेषु
पञ्चसु। इन्द्र तानि त आ वृणे।, इति।

हे शतक्रतो पञ्चसु जनेषु निषादपञ्चमेषु ब्राह्मणादिवर्णेषु यानि ते तवा-
नुग्रहादिन्द्रियाणि सामर्थ्यानि सन्ति, हे इन्द्र तानि सर्वाणि ते तवानुग्रहा-
दावृणे समन्तादृह्णामि ॥

याज्यामाह—

अनु ते दायि मह इन्द्रियाय सत्रा ते
विश्वमनु वृत्रहत्ये। अनु क्षत्रमनु सहो
यजत्रेन्द्र देवेभिरनु ते नृषह्ये।, इति।

यजत्र यष्टव्य हे इन्द्र महे महते सर्वेभ्यो देवेभ्योऽधिकाय ते तुभ्यं सत्रा
सत्रेषु विश्वं सर्वं हविर्देवेभिरग्न्यादिभिरनुदायि अनुक्रमेण दीयते। किमर्थम्।
वृत्रहत्ये वृत्रवधमनु ते तवेन्द्रियाय बलसिध्यर्थम्। न केवलं वृत्रवधमनुसृत्य किं तु
क्षत्रमनु त्वदीयं क्षत्रियत्वजात्यभिमानमनुसृत्य, सहोऽनु त्वदीयं बलमनुसृत्य,
नृषह्ये वैरिमनुष्यतिरस्कारशीलमनुसृत्य, त्वयि यथोक्तान्गुणानवेक्ष्य ते तुभ्यं
पुनः पुनर्दीयत इति शेषः॥

---

१ ख. °कानः सम्यक्प्रकाशको।

अन्यामिष्टिं विधत्ते—

" इन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामो ब्रह्मवर्चसं वै घर्म इन्द्रमेव घर्मवन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति " [ सं० का० २ प्र० २ अ० ७ ] इति ।

घर्मवते वेदशास्त्रादिप्रयुक्तब्राह्मतेजोयुक्ताय । विद्वत्सु वेदशास्त्रादिरूपेण ब्रह्मवर्चसेन दीप्यत इति ब्रह्मवर्चसस्य घर्मत्वम् ॥

एतस्यामिष्टौ पुरोनुवाक्यामाह—

आ यस्मिन्त्सप्त वासवास्तिष्ठन्ति स्वारुहो यथा । ऋषिर्ह दीर्घश्रु-त्तम इन्द्रस्य घर्मो अतिथिः।, इति ।

वासयन्ति रथस्योपर्यादित्यमिति वासवा आदित्यस्याश्वाः । ते च सप्तसंख्याकाः । सप्त युञ्जन्ति रथमेकचक्रमिति मन्त्रवर्णात् । न चैवं मन्येको अश्वो वहति सप्तनामेत्यनेन विरोधः । वचनद्वयबलेन विकल्पस्याङ्गीकृतत्वात् । ते च सप्ताश्वाः स्वारुहो यथाऽऽदित्यपरतन्त्रा अपि स्वयमेवाऽऽरोहन्त इव वर्तन्ते, सुशिक्षितत्वेन प्रेरणं विनैव प्रवृत्तत्वात् । तादृशाः सप्ताश्वा यस्मिन्नादित्य आतिष्ठन्ति अभिवर्तन्ते स आदित्य ऋषिर्हातीन्द्रियज्ञान्येव सर्वदा वेदत्रयोपेतत्वात् । अत एवाऽऽम्नायते—" वेदैरशून्यस्त्रिभिरेति सूर्यः" इति । दीर्घश्रुत्तमस्त्रैलोक्यप्रकाशनेन प्रथितकीर्तितमः । ईदृशो घर्मो दीप्यमान आदित्य इन्द्रस्य गृहेऽतिथिः स्वाभीष्टं याचितुं यदा कदाचिदागच्छति तस्येन्द्रस्य महिमा किमिव वक्तव्य इत्यभिप्रायः ॥

याज्यामाह—

आमासु पक्कमैरय आ सूर्यꣳ रोहयो दिवि । घर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे गिरः । , इति ।

आमासु फलपाकरहितास्वोषधीषु पक्वं सम्यक्पाकयुक्तं फलं हे इन्द्र त्वमैरयो वृष्टिद्वारा संपादितवानसि । सूर्यं विचरन्तं परिवर्तनसामर्थ्यप्रदानेन दिव्यारोहयसि । हेतिभिर्यजमाना जुष्टमिन्द्रस्य प्रियं हविः पुरोडाशरूपं

१ ख. 'द्वृत्सभासु वे' । २ ख. 'न्ति आश्रित्य व' । ३ ख. 'किमु वक्त' ।

( याज्यापुरोनुवाक्याभिधानम् )

तपत सुष्ठु हुतं कुरुत। किमिव, घर्मं न प्रवर्ग्यमिव, सुवृक्तिभिर्हुंकारप्रस्तावादिशोभनभक्तियुक्तैः सामन्सामभिर्घर्मं यथा तपन्ति। गिर्वणसे गीर्भिः स्तुत्यायेन्द्राय गिरः स्तुतिरूपाः प्रयुङ्क्तेति शेषः॥

इष्ट्यन्तरं विधत्ते—

" इन्द्रायार्कवते पुरोडाशमेकादशकपालं निर्वपेदन्नकामोऽर्को वै देवानामन्नमिन्द्रमेवार्कवन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मा अन्नं प्र यच्छत्यन्नाद एव भवति " [ सं० का० २ प्र० २ अ० ७ ] इति।

बुभुक्षुभिरर्थ्यमानत्वादादरेण स्वीक्रियमाणत्वादन्नस्यार्कत्वम्॥

तत्र पुरोनुवाक्यामाह—

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत।, इति।

गाथिनः सामगा बृहद्बृहता साम्नेन्द्रमिदिन्द्रमेवानूषतास्तुवन्। ऋच स्तुताविन्यस्माद्धातोरुत्पन्नोऽर्कशब्द ऋचमाचष्टे। अर्केभिर्ऋग्भिरर्किणो बह्वृचा इन्द्रमस्तुवन्। वाणीरन्या अपि वाचो यजूरूपा इन्द्रमस्तुवन्॥

याज्यामाह—

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः। ब्रह्माणस्त्वा शतक्रतवुद्वꣳशमिव येमिरे।, इति।

हे शतक्रतो गायत्रिणो गायत्रसामयुक्ता उद्गातारस्त्वां गायन्ति। अर्किणो बह्वृचास्त्वामर्चन्ति स्तुवन्ति। ब्रह्माणस्तदुपलक्षिता अध्वर्यवोऽपि त्वामुद्येमिर उत्थापयन्ति वर्धयन्तीत्यर्थः। किमिव, वंशमिव। यथा कुलाचारादिभिः स्वकीयं वंशमुन्नतं कुर्वन्ति तद्वत्॥

इष्ट्यन्तरं त्रिहविष्कं विधत्ते—

" इन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायेन्द्रियावत इन्द्रायार्कवते भूतिकामो यदिन्द्राय घर्मवते निर्वपति शिर एवास्य तेन करोति यदिन्द्रायेन्द्रियावत आत्मानमेवास्य तेन करोति यदिन्द्रायार्कवते भूत एवान्नाद्ये प्रति तिष्ठति भवत्येव " [ सं० का० २ प्र० २ अ० ७ ] इति।

तेन घर्मवते निर्वापेणाध्वर्युरस्य यजमानस्य शिरः करोति। एवंविधैश्वर्या-

१ ख. 'भिर्हिका'। २ च. प्रतीयन्ते। इ'।

दिभिः सभायामुन्नतशिरस्कं करोति। तेनेन्द्रियावते निर्वापेणास्य यजमानस्याऽऽत्मानमेव करोति पुष्टशरीरमेव करोति। अर्कवते निर्वापेण यजमानो भूत एवैश्वर्यं प्राप्त एव सन्नदनयोग्ये सम्यगन्ने प्रतितिष्ठति। भवत्येव पुनरप्यधिकमैश्वर्यं प्राप्नोत्येव। अत्र घर्मवतो हविषि "आ यस्मिन्" इत्यादिके याज्यानुवाक्ये। इन्द्रियावतो हविषि "इन्द्रियाणि शतक्रतो" इत्यादिके। अर्कवतो हविषि "इन्द्रमिद्गाथिनो बृहत्" इत्यादिके॥

इष्ट्यन्तरं विधत्ते—

"इन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पाप्मना गृहीतः स्यात्पाप्मा वा अꣳह इन्द्रमेवाꣳहोमुचꣳ स्वेन भागधेयेनोप धावति स एवैनं पाप्मनोऽꣳहसो मुञ्चति" [ सं० का० २ प्र० २ अ० ७ ] इति।

अंहःशब्देनात्र नरकहेतुर्निषिद्धाचरणादिरूपः पाप्मोच्यते। पाप्मनोऽहसोऽत्यधिकात्पापादित्यर्थः॥

तत्र पुरोनुवाक्यामाह—

अꣳहोमुचे प्र भरेमा मनीषामोषिष्ठदाव्ने सुमतिं गृणानाः। इदमिन्द्र प्रति हव्यं गृभाय सत्याः सन्तु यजमानस्य कामाः।, इति।

गृणानाः स्तुवन्तो वयमोषिष्ठदाव्ने ग्रीष्मकाले दावाग्निनाऽत्यन्तदग्धभूप्रदेशेभ्यो वर्षतो वृष्टिदात्रेंऽहोमुचे पापान्मोचयित्रे मनीषां बुद्धिं प्रभरेम स्वी कुर्मः। कीदृशीं सुमतिं, त्वां तोषयेमन्येवमादिशोभनमननोपेताम्। हे इन्द्रेदं त्यज्यमानं हव्यं प्रतिगृहाण। तेन यजमानस्य कामाः सत्याः सन्तु॥

याज्यामाह—

विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः। अꣳहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते।, इति।

यद्यस्मात्कारणाद्धिषणा पूर्वोक्ता बुद्धिर्मां विवेष व्याप्तवती तस्मादहं सुबुद्धिर्जजान जातवानस्मि। अत एव पार्यादह्नः पुरोत्तमान्मरणदिवसात्पुरा त्वां स्तवै, आमरणं स्तवानीत्यर्थः। यत्र यस्यां धिषणायां सत्यामिन्द्रोऽ-

१ ख. °ह्नः पारे भवान्म°। २ क. घ. ङ. च. त्वा तथैवाऽऽम°।

स्मानंहसः पापात्पीपरदुत्तारितवान्सा धिषणा विवेषेत्यन्वयः। अथवा यत्रा-ह्न्यस्मानंहसः पारयति तस्मात्पार्याद्द्वः पुरा स्तवा इत्यन्वयः। यथा लोके नावा नद्यां यान्तं नाविकमुभये कूलद्वयवर्तिनो हवन्ते मामुत्तारयेत्याह्वयन्ति तथैवांहसो मुक्तानस्मानुभयकूलप्रभवा आह्वयन्तीत्यर्थः॥

अत्रैव विकल्पितामन्यां याज्यामाह—

> प्र सम्राजं प्रथममध्वराणामꣳहोमुचं वृषभं यज्ञियानाम्। अपां नपातमश्विना हयन्तमस्मिन्नर इन्द्रियं धत्तमोजः।, इति।

हे नरो मनुष्या ऋत्विजः प्रकर्षेणेन्द्रं भजतेति शेषः। कीदृशं, सम्राजं सम्यग्दीप्यमानम्। अध्वराणामग्निष्टोमादीनां प्रथमं मुख्यदेवम्। अंहोमुचं पापान्मोचयितारम्। यज्ञियानां यज्ञसंबन्धिफलानां वृषभं वर्षितारम्। अपां वृष्टिरूपाणामुदकानां नपातमविनाशयितारम्। हयन्तमैश्वर्यस्य गमयितारम्। हेऽश्विनावस्मिन्यजमान इन्द्रियं चक्षुरादिपाटवमोजो बलं च धत्तं स्थापयतम्॥

इष्ट्यन्तरं विधत्ते—

“ इन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपेद्यं मृधोऽभि प्रवेपेरन्रा-ष्ट्राणि वाऽभि समियुरिन्द्रमेव वैमृधꣳ स्वेन भागधेयेनोप धावति स एवास्मा-न्मृधोऽपहन्ति ” [ सं का० २ प्र० २ अ० ८ ] इति।

मृधो वैरिणो यं यजमानमभितः प्रवेपेरन्प्रकर्षेण कम्पयेयुर्भीतिमुत्पादयेयुः। अथ वा राष्ट्राणि देशानभितो विनाशयितुं समियुः संगता भवेयुः, तस्य यज-मानस्य रक्षायै वैमृधाय शत्रुविनाशकायेन्द्राय निर्वपेत्। स चेन्द्रोऽस्माद्यजमा-नान्मृधः शत्रूनपहन्ति॥

तत्र पुरोनुवाक्यामाह—

> वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। अध-स्पदं तमीं कृधि यो अस्माꣳ अभिदासति।, इति।

हे इन्द्र नोऽस्माकं मृधः शत्रून्विशेषेण जहि। किं च, पृतन्यतोऽस्मान्घातयितुं सेनामिच्छतः शत्रून्नीचान्यग्भूतान्यच्छोपरतान्कुरु। यश्चान्योऽस्मानभिदासत्यु-पक्षपयति तमीं तमपि वैरिणमधस्पदमस्मत्पादयोः प्रणतशिरस्कं कृधि कुरु॥

---

१ ख. 'न्ते भो मा'। २ ख. 'न्द्रायैकादशकपालं पुरोडाशं नि'।

तत्र याज्यामाह—

इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ
चर्षणीनाम्। अपानुदो जनममित्रयन्त-
मुरुं देवेभ्यो अकृणोरु लोकम्।, इति।

हे इन्द्र वामं वननीयं क्षत्रं क्षतात्त्रक्षणमोजोऽस्मदीयं बलं चाभिलक्ष्याजायथा एतत्सर्वं संपादयितुं जातोऽसि। चर्षणीनां मनुष्याणां हे वृषभ कामानां वर्षकामित्रयन्तं शत्रुभावमिच्छन्तं जनमपानुदस्निरस्कृतवानसि। देवेभ्यो हविष्प्रदानादिव्यवहारिभ्यो यजमानेभ्य उरुं विस्तीर्णं लोकं भोगस्थानमकृणोरु कृतवानेवासि ॥

तस्यामेवेष्टौ विकल्पितां पुरोनुवाक्यामाह—

मृगो न भीमः कुचरो गिरिष्ठाः परावत आ
जगामा परस्याः। सृकं संशाय पविमिन्द्र
तिग्मं वि शत्रून्ताढि वि मृधो नुदस्व।, इति।

हे इन्द्र भीमो भयंकरः कुचरः प्राणिभक्षणादिरूपकुत्सिताचरणशीलो गिरिष्ठाः पर्वतनिवासी मृगो न सिंहव्याघ्रादिमृग इव परस्याः परावतो महतो दूरादाजगामास्मद्विरोधिनं हन्तुमागतोऽसि। आजगन्थेति हि शाखान्तरे मध्यमपुरुषः पठितः। सृकं परशरीरादिषु सरणशीलं तिग्मं तीक्ष्णं पविं वज्रं संशाय सम्यक्तीक्ष्णं कृत्वा विशेषेण शत्रूंस्ताडय। मृधो योद्धॄञ्शत्रून्विशेषेण नुदस्व निराकुरु ॥

विकल्पितां याज्यामाह—

वि शत्रून्वि मृधो नुद वि वृत्रस्य हनू रुज। वि
मन्युमिन्द्र भामितोऽमित्रस्याभिदासतः।, इति।

हे इन्द्र शत्रून्विशेषेण नुद निराकुरु। मृधो योद्धॄनपि विशेषेण नुद। वृत्रस्य हनू विरुज विशेषेण भग्नौ कुरु। त्वं भामितः क्रुद्धः सन्नभिदासतोऽस्मानुपक्षपयतोऽमित्रस्य वैरिणो मन्युं विशेषेण भग्नं कुरु ॥

इष्ट्यन्तरं विधत्ते—

“इन्द्राय त्रात्रे पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वेन्द्रमेव त्रातारꣳ स्वेन भागधेयेनोप धावति स एवैनं त्रायते” [ सं० का० २ प्र० २ अ० ७ ] इति।

( याज्यापुरोनुवाक्याभिधानम् )

बद्धः शृङ्खलया निगडितः। परियत्तः शृङ्खलामन्तरेण परितो भटैरवरुद्धः॥

तत्र पुरोनुवाक्यामाह—

त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम्। हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः।, इति।

त्रातारं शृङ्खलाबन्धाद्रक्षितारम्। अवितारं भटावरोधाद्रक्षितारम्। शूरं बन्धकानामवरोधकानां च निरस्कारे क्षमम्। हवे हवे सुहवं सर्वस्मिन्होमे सुखेनाऽऽह्वातुं शक्यम्। शक्रं सर्वेषु कार्येषु शक्तियुक्तम्। पुरुहूतं बहुभिर्यजमानैराहूतमिन्द्रं हुवे नु आह्वयाम्येव। प्रतिविशेषणमिन्द्रशब्दावृत्तिर्वाक्यभेदार्थम्। त्रातारमिन्द्रं हुवे। अवितारमिन्द्रं हुव इत्येवं वाक्यभेदः। तैश्च बहुभिर्वाक्यैरादरातिशयः प्रदर्श्यते। इन्द्राऽऽगच्छ हरिव आगच्छेत्यादौ[1] तद्दर्शनात्। लोकेऽप्यतिबालं पुत्रमुपलालयितुं पितरागच्छ भ्रातरागच्छेत्यादौ[2] दृश्यते। मघवा धनवानिन्द्रो नोऽस्मभ्यं स्वस्ति धातु अविनाशं ददातु[3]॥

तत्रैव याज्यामाह—

मा ते अस्यां सहसावन्परिष्टावघाय भूम हरिवः परादै। त्रायस्व नोऽवृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम।, इति।

हे सहसावन्बलवन्निन्द्रास्यां परिष्टौ परित्राणार्थं क्रियमाणायामिष्टौ वयमघाय वैकल्याय मा भूम, अस्मदनुष्ठिते कर्मणि वैकल्यं मा भूदित्यर्थः। हे हरिवो हरिभिरश्वैस्तद्वन्परादै परादातुं त्वामवज्ञातुं वयं मा भूम कदाचिदप्यवज्ञां मा करवामेत्यर्थः। त्वं नोऽस्मानवृकेभिर्हिंसकरहितैर्वरूथैर्गृहैस्त्रायस्व। तादृशान्गृहान्प्रयच्छ। सूरिषु विद्वत्सु यजमानेषु मध्ये वयं तव प्रिया भवेम॥

इष्ट्यन्तरं विधत्ते—

"इन्द्रायार्काश्वमेधवते पुरोडाशमेकादशकपालं निर्वपेद्यं महायज्ञो नोपनमेदेते वै महायज्ञस्यान्त्ये तनू यदर्काश्वमेधाविन्द्रमेवार्काश्वमेधवन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मा अन्ततो महायज्ञं च्यावयत्युपैनं महायज्ञो नमति" [ सं० का० २ प्र० २ अ० ७ ] इति।

अश्वमेधयज्ञस्य साधनभूतो योऽग्निः सोऽर्कः। यश्च तत्फलभूत आदित्यः

---

१ ख. 'क्यैर्महिमाति'। २ ख. घ. ङ. च. 'दौ तद्दृश्य'। ३ ख. दधातु।

सोऽश्वमेधः। अत एव पञ्चमकाण्डे पञ्चार्काहुतिविधिशेषार्थवादे समाम्नायते— "अर्को वा एष यदग्निरसावादित्योऽश्वमेधो यदेता आहुतीर्जुहोत्यर्काश्वमेधयोरेव ज्योतींषि संदधाति" इति। अश्वमेधब्राह्मणेऽप्याम्नायते— "अग्निर्वा अश्वमेधस्य योनिरायतनम्। सूर्योऽग्नेर्योनिरायतनम्। यदश्वमेधेऽग्नौ चित्य उत्तरवेदिं चिनोति। तावर्काश्वमेधौ" इति। वाजसनेयिनोऽपि चित्यस्याग्नेरुपासने समामनन्ति—"एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ" इति। इन्द्रः स्तुतयोरग्न्यादित्ययोः स्वामित्वादर्काश्वमेधवानित्युच्यते। यं यजमानं प्रत्यश्वमेधराजसूयरूपो महायज्ञो नोपनमेन्न प्राप्नुयान्स यजमानोऽर्काश्वमेधस्वामिने निर्वपेत्। यावेतावर्काश्वमेधशब्दवाच्यावग्न्यादित्यौ तावुभौ महायज्ञस्याश्वमेधस्यान्त्ये तनू प्रारम्भसमाप्तिकोट्योर्वर्तमानशरीरे। चित्याग्निः साधनत्वेन प्रारम्भकोटौ वर्तते। आदित्यः फलरूपत्वेन समाप्तिकोटिगामी। स एवेन्द्र एवास्मै यजमानस्य समीपे महायज्ञं प्रेरयति। स च महायज्ञ एनं यजमानमुपनमति प्राप्नोति ॥

तत्र पुरोनुवाक्यामाह—

> अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम्। ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ।, इति।

हे पुरुहूत बहुभिर्यजमानैराहूतेन्द्र ते तव रथमनवो मनुष्यास्तक्षंस्तक्षन्तु संस्कुर्वन्तु। किमर्थम्। अश्वायाश्वं संयोक्तुम्। त्वष्टा देवः शिल्पी द्युमन्तं दीप्तिमन्तं वज्रं तक्षतु। ब्रह्माणो ब्राह्मणा ऋत्विजोऽर्कैरर्चनसाधनैर्मन्त्रैर्महयन्तः पूजयन्त इन्द्रमवर्धयन्यशसा वर्धयन्तु। अहयेऽहिमघं महायज्ञप्राप्तिप्रतिबन्धकं पापं हन्तवा उ अवश्यं हन्तुमवर्धयन्नित्यन्वयः ॥

याज्यामाह—

> वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः। अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ।, इति।

हे इन्द्र यद्यदा वृष्णे ते कामाभिवर्षिणस्तव संबन्धिनमर्कमर्चनीयं वृषणो

---

१ ख. इन्द्रस्तु त'। २ ख. 'सूयादिम'।

( इडानुमन्त्रणम् )

वर्षणं(कं) फलाभिवर्षकं यागं ग्रावाणः साधनभूता दृषदुपलादयः पदार्था अर्चानर्चयन्ति अलंकुर्वन्ति, तदानीमदितिर्वेदिरूपा पृथिवी सजोषास्त्वया समानप्रीतिर्भवतु । इन्द्रेषिता इन्द्रप्रेरिता ये पवयो वज्राः सन्ति तेऽप्यरथा अनश्वासो रथाश्वनिरपेक्षा एव दस्यून्महायज्ञप्राप्तिप्रतिबन्धकानसुरानभ्यवर्तन्ताभिलक्ष्य हन्तुं प्रवर्तन्ताम् ॥

अत्र विनियोगसंग्रहः—

"इन्द्रं वो विश्वतोऽमुष्मिन्नश्वरावैन्द्र ऋचोर्द्वयम् ।
इन्द्रीन्द्रियावद्यागे स्यादा यस्मिन्घर्मवद्यजौ ॥ १ ॥
इन्द्रं स्यादर्कवद्यागे तिस्रोऽहोमुग्यजावृचः ।
वि नो(वै)मृधे चतस्रः स्युस्त्रातारं त्रातृमद्यजौ ॥
अनवोऽर्काश्ववद्यागे मन्त्राः सप्तदशेरिताः(त्रा एकोनविंशतिः)" ॥२॥ इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठः प्रपाठकः ॥ ६ ॥

---

( अथ प्रथमाष्टके सप्तमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

पाकयज्ञं वा अन्वाहिताग्नेः पशव उप तिष्ठन्त इडा खलु वै पाकयज्ञः सैषाऽन्तरा

प्रयाजानूयाजान्यजमानस्य लोकेऽवहिता ता-
मांह्रियमाणामभि मन्त्रयेत सुरूपवर्षवर्ण
एहीति पशवो वा इडा पशूनेवोप ह्वयते यज्ञं
वै देवा अदुहन्यज्ञोऽसुरां अदुहत्तेऽसुरा यज्ञ-
दुग्धाः पराऽभवन्यो वै यज्ञस्य दोहं विद्वान्
( १ ) यजतेऽप्यन्यं यजमानं दुहे सा मे
सत्याऽऽशीरस्य यज्ञस्य भूयादित्याहैष वै यज्ञ-
स्य दोहस्तेनैवैनं दुहे प्रत्ता वै गौर्दुहे प्रत्तेडा
यजमानाय दुह एते वा इडायै स्तना इडोप-
हूतेति वायुर्वत्सो यर्हि होतेडामुपह्वयेत तर्हि
यजमानो होतारमीक्षमाणो वायुं मनसा
ध्यायेत् (२) मात्रे वत्समुपावसृजति सर्वेण वै
यज्ञेन देवाः सुवर्गं लोकमायन्पाकयज्ञेन मनु-
रश्राम्यत्सेडा मनुमुपावर्तत तां देवासुरा व्यह्व-
यन्त प्रतीचीं देवाः पराचीमसुराः सा देवानु-
पावर्तत पशवो वै तद्देवानवृणत पशवोऽसुरा-
नजहुर्यं कामयेतापशुः स्यादिति पराचीं तस्ये-
डामुप ह्वयेतापशुरेव भवति यम् (३) कामयेत
पशुमान्त्स्यादिति प्रतीचीं तस्येडामुप ह्वयेत
पशुमानेव भवति ब्रह्मवादिनो वदन्ति स त्वा

( इडानुमन्त्रणम् )

इडामुप ह्वयेत य इडामुपहूयाऽऽत्मानमिडा-
यामुप ह्वयेतेति सा नः प्रिया सुप्रतूर्तिर्मघोनी-
त्याहेडामेवोपहूयाऽऽत्मानमिडायामुप ह्वयते
व्यस्तमिव वा एतद्यज्ञस्य यदिडा सामि
प्राश्नन्ति ( ४ ) सामि मार्जयन्त एतत्प्रति वा
असुराणां यज्ञो व्यच्छिद्यत ब्रह्मणा देवाः
समदधुर्बृहस्पतिस्तनुतामिमं न इत्याह ब्रह्म
वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सं दधाति
विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह संतत्यै
विश्वे देवा इह मादयन्तामित्याह संतत्यैव
यज्ञं देवेभ्योऽनु दिशति यां वै ( ५ ) यज्ञे
दक्षिणां ददाति तामस्य पशवोऽनु सं क्राम-
न्ति स एष ईजानोऽपशुर्भावुको यजमानेन
खलु वै तत्कार्यमित्याहुर्यथा देवत्रा दत्तं कुर्वी-
ताऽऽत्मन्पशून्रमयेतेति ब्रध्न पिन्वस्वेत्याह यज्ञो
वै ब्रध्नो यज्ञमेव तन्महयत्यथो देवत्रैव दत्तं
कुरुत आत्मन्पशून्रमयते ददतो मे मा क्षायी-
त्याहाक्षितिमेवोपैति कुर्वतो मे मोप दसदि-
त्याह भूमानमेवोपैति ( ६ ) ॥

(इडानुमन्त्रणम्)

( विद्वान्ध्यायेद्भवति यं प्राश्नन्ति यां वै म एकान्नविंꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमाष्टके सप्तमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

पाकयज्ञमिति पाक—यज्ञम् । वै । अन्विति । आहिताग्नेरित्याहित—अग्नेः । पशवः । उपेति । तिष्ठन्ते । इडा । खलु । वै । पाकयज्ञ इति पाक—यज्ञः । सा । एषा । अन्तरा । प्रयाजानूयाजानिति प्रयाज—अनूयाजान् । यजमानस्य । लोके । अवहितेत्यव—हिता । ताम् । आह्रियमाणामित्या—ह्रियमाणाम् । अभीति । मन्त्रयेत । सुरूपवर्षवर्ण इति सुरूप—वर्षवर्णे । एति । इहि । इति । पशवः । वै । इडा । पशून् । एव । उपेति । ह्वयते । यज्ञम् । वै । देवाः । अदुह्नन् । यज्ञः । असुरान् । अदुहत् । ते । असुराः । यज्ञदुग्धा इति यज्ञ—दुग्धाः । परेति । अभवन् । यः । वै । यज्ञस्य । दोहम् । विद्वान् । ( १ ) यजते । अपीति । अन्यम् । यजमानम् । दुहे । सा । मे । सत्या । आशीरित्या—शीः । अस्य । यज्ञस्य । भूयात् । इति । आह । एषः । वै । यज्ञस्य । दोहः । तेन ।

एव। एनम्। दुहे। प्रत्ता। वै। गौः। दुहे। प्रत्ता। इडा। यजमानाय। दुहे। एते। वै। इडायै। स्तनाः। इडा। उपहूतेत्युप—हूता। इति। वायुः। वत्सः। यर्हि। होता। इडाम्। उपह्वयेतेत्युप—ह्वयेत। तर्हि। यजमानः। होतारम्। ईक्षमाणः। वायुम्। मनसा। ध्यायेत्। (२) मात्रे। वत्सम्। उपावसृजतीत्युप—अवसृजति। सर्वेण। वै। यज्ञेन। देवाः। सुवर्गमिति सुवः—गम्। लोकम्। आयन्। पाकयज्ञेनेति पाक—यज्ञेन। मनुः। अश्राम्यत्। सा। इडा। मनुम्। उपावर्ततेत्युप—आवर्तत। ताम्। देवासुरा इति देव—असुराः। वीति। अह्वयन्त। प्रतीचीम्। देवाः। पराचीम्। असुराः। सा। देवान्। उपावर्ततेत्युप—आवर्तत। पशवः। वै। तत्। देवान्। अवृणत। पशवः। असुरान्। अजहुः। यम्। कामयेत। अपशुः। स्यात्। इति। पराचीम्। तस्य। इडाम्। उपेति। ह्वयेत। अपशुः। एव। भवति। यम्। (३) कामयेत। पशुमानिति पशु—मान्। स्यात्। इति। प्रतीचीम्। तस्य। इडाम्। उपेति। ह्वयेत। पशुमानिति पशु—मान्। एव। भवति। ब्रह्मवादिन इति ब्रह्म—वादिनः।

वदन्ति । सः । तु । वै । इडाम् । उपेति । ह्वयेत । यः । इडाम् । उपहूयेत्युप—हूयं । आत्मानम् । इडायाम् । उपह्वयेतेत्युप—ह्वयेत । इति । सा । नः । प्रिया । सुप्रतूर्तिरिति सु—प्रतूर्तिः । मघोनी । इति । आह । इडाम् । एव । उपहूयेत्युप—हूयं । आत्मानम् । इडायाम् । उपेति । ह्वयते । व्यस्तमिति वि—अस्तम् । इव । वै । एतत् । यज्ञस्य । यत् । इडा । सामि । प्राश्नन्तीति प्र—अश्नन्ति । ( ४ ) सामि । मार्जयन्ते । एतत् । प्रतीति । वै । असुराणाम् । यज्ञः । वीति । अच्छिद्यत । ब्रह्मणा । देवाः । समिति । अदधुः । बृहस्पतिः । तनुताम् । इमम् । नः । इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । यज्ञम् । समिति । दधाति । विच्छिन्नमिति वि—छिन्नम् । यज्ञम् । समिति । इमम् । दधातु । इति । आह । संतत्या । इति सं—तत्यै । विश्वे । देवाः । इह । मादयन्ताम् । इति । आह । संतत्येति सं—तत्यं । एव । यज्ञम् । देवेभ्यः । अन्विति । दिशति । याम् । वै । ( ५ ) यज्ञे । दक्षिणाम् । ददाति । ताम् । अस्य । पशवः । अनु । समिति । क्रामन्ति । सः । एषः । ईजानः । अपशुः ।

( इडानुमन्त्रणम् )

भावुकः । यजमानेन । खलु । वै । तत् । कार्यम् । इति । आहुः । यथा । देवत्रेति देव—त्रा । दत्तम् । कुर्वीत । आत्मन् । पशून् । रमयेत । इति । ब्रध्न । पिन्वस्व । इति । आह । यज्ञः । वै । ब्रध्नः । यज्ञम् । एव । तत् । महयति । अथो इति । देवत्रेति देव—त्रा । एव । दत्तम् । कुरुते । आत्मन् । पशून् । रमयते । ददतः । मे । मा । क्षायि । इति । आह । अक्षितिम् । एव । उपेति । एति । कुर्वतः । मे । मा । उपेति । दसत् । इति । आह । भूमानम् । एव । उपेति । एति । ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(अथ प्रथमकाण्डे सप्तमः प्रपाठकः ।)

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रपाठके सप्तमेऽस्मिन्ननुवाकास्त्रयोदश ।
याजमानब्राह्मणस्य शेषः षट्स्वादिमेषु हि ॥
वाजपेयस्य मन्त्रास्तु षट्स्वन्येष्वथ याज्यकाः ।
इडानुमन्त्रणं तस्या इडायाश्च प्रशंसनम् ॥
अन्वाहार्योऽथ मन्त्रानुवाकव्याख्या त्रिषु स्मृता ।
रथमन्त्रा धावनं च रोहणं वाजहोमकः ।
उज्जित्यतिग्राह्ययाज्या इत्यर्था अनुवाकगाः ॥

तत्र प्रथमेऽनुवाक इडानुमन्त्रणमुच्यते । तदेतद्विधातुं प्रस्तौति—

पाकयज्ञं वा अन्वाहिताग्नेः पशव उप तिष्ठन्त इडा खलु वै पाकयज्ञः सैषाऽन्तरा प्रयाजानूयाजान्यजमानस्य लोकेऽवहिता, इति ।

पाकयज्ञस्य स्वरूपमापस्तम्बसूत्रव्याख्यातृभिरुक्तम्—"औपासनहोमो वैश्वदेवं पार्वणमष्टका मासि श्राद्धं सर्पबलिरीशानबलिरिति सप्त पाकयज्ञसंस्थाः" इति । बौधायनोऽप्याह—"हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसंस्थाः" इति । अन्ये त्वाहुः—"अल्पयज्ञाः पाकयज्ञाः" इति । आश्वलायनोऽप्याह—त्रयः पाकयज्ञा हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणि हुताः" इति ।

एतेषां मध्ये यं कंचिदप्याहिताग्नेः पाकयज्ञमनु गवाद्याः पशवोऽवस्थिता भवन्ति पाकयज्ञेन लभ्यन्त इत्यर्थः । अत्र त्विडाभक्षणमेव पाकयज्ञो ब्रह्मणि हुतत्वात् । अतोऽनेनापीडाभक्षणेन पशवो लभ्यन्ते । तत्रेयमिडा यजमानस्य लोके फलसाधने यज्ञे प्रयाजानुयाजमध्ये व्यवस्थिता । प्रयाजाज्यभागप्रधानस्विष्टकृद्भ्य ऊर्ध्वमनूयाजेभ्यश्च प्रागिडाया अनुष्ठेयत्वात् । एतच्च हौत्रकाण्डे स्विष्टकृद्याज्याया अनूयाजयाज्यायाश्च मध्य इडोपाह्वानमन्त्रपाठादवगम्यते ॥

विधत्ते—

तामाह्रियमाणामभि मन्त्रयेत सुरूपवर्षवर्ण एहीति पशवो वा इडा पशूनेवोप ह्वयते, इति ।

तामिडामाह्रियमाणामवदाय होतृसमीपमानीयमानाम् । तत्प्रकारमापस्तम्ब आह—"इडापात्रमुपस्तीर्य सर्वेभ्यो हविर्भ्य इडाꣳ समवद्यति चतुरवत्तां वा पञ्चावत्ताम्" इति । "अभिघार्येडाꣳ होत्रे प्रदाय" इति च । इडादेवतायाः पशुसाधनत्वाद्गोरूपत्वाच्च मन्त्रगतेनेहीति पदेन पशूनेवोपह्वयते ॥

सा मे सत्याऽऽशीरित्येतं मन्त्रभागं व्याख्यातुं प्रस्तौति—

यज्ञं वै देवा अदुह्रन्यज्ञोऽसुराꣳ अदुहन्तेऽ-

---

१ क. घ.° जनं ब्र° ।

सुरा यज्ञदुग्धाः पराऽभवन्यो वै यज्ञस्य
दोहं विद्वान्यजतेऽप्यन्यं यजमानं दुहे, इति।

दोहनं रिक्तीकरणम्। गां दोग्धीत्यत्र तथा दर्शनात्। देवाः प्रथमं यज्ञमदुहन्नदुहन्, तद्गतसारफलस्वीकारेण रिक्तीं चक्रुः। स च यज्ञोऽसुरानदुहत्तदीयसारापहारेण रिक्तीं चकार। ततस्ते पराभूताः। यो यजमानो देवकर्तृकं यज्ञरिक्तीकरणं यज्ञकर्तृकमसुररिक्तीकरणं च विद्वान्यजते सोऽन्यमपि यजमानं दुहे रिक्तीं करोति। एतस्य वाक्यस्य मन्त्रप्रशंसारूपत्वादन्यस्य यजमानस्य न काचिद्धानिः॥

व्याचष्टे—

मा मे सत्याऽऽशीरस्य यज्ञस्य भूयादित्या-
हैष वै यज्ञस्य दोहस्तेनैवैनं दुहे, इति।

उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूत इत्यादिका येयमाशीरूपह्वानमन्त्रगता सेयमस्य यज्ञस्य संबन्धिन्याशीर्मम सत्या भूयादित्येवंरूपो यज्ञदोहस्तेनैवान्यं यजमानं दोग्धि॥

वायुध्यानं विधातुं प्रस्तौति—

प्रत्ता वै गौर्दुहे प्रत्तेडा यजमानाय दुह एते
वा इडायै स्तना इडोपहूतेति वायुर्वत्सः, इति।

प्रत्ता वत्सलेहनेन प्रस्नुतस्तनी गौर्दुहे पयः क्षारयति तद्वदत्रेडा प्रत्ता सती यजमानस्य फलं दोग्धि। तस्या इडाया इडोपहूतेत्यादिमन्त्रभागाः स्तनाः। वायुर्वत्सः॥

विधत्ते—

यर्हि होतेडामुपह्वयेत तर्हि यज-
मानो होतारमीक्षमाणो वायुं मनसा
ध्यायेन्मात्रे वत्समुपावसृजति, इति।

यर्हि यस्मिन्काले॥

इडोपहूतेत्यादिमन्त्रभागप्रयोगे हेयोपादेयपक्षौ विधातुं प्रस्तौति—

सर्वेण वै यज्ञेन देवाः सुवर्गं लोकमायन्पाकय-

ज्ञेन मनुरश्राम्यत्सेडा मनुमुपावर्तत तां
देवासुरा व्यह्वयन्त प्रतीचीं देवाः परा-
चीमसुराः सा देवानुपावर्तत पशवो वै
तद्देवानवृणत पशवोऽसुरानजहुः, इति।

मनुसहिताः सर्वे देवाः कृत्स्नेन दर्शपूर्णमासयागेन स्वर्गलोकं प्राप्तुमुद्यताः। तत्र मनुः पाकयज्ञेन श्रान्तोऽभूत्। "इडा खलु वै पाकयज्ञः" इत्युक्तम्। अतो मनुर्होता सन्निडोपाह्वान एव तात्पर्यवानभूदित्युक्तं भवति। सा चेडा देवता तात्पर्यवन्तं मनुमुपगतवती। तां दृष्ट्वा देवाश्चासुराश्च परस्परव्यत्ययेनाह्वयन्त। ते देवाः प्रतीचीं संमुखमुपाह्वयन्त। असुराः पराचीनमुखमुपाह्वयन्त। इडोपहूतेत्येवमादाविडाशब्दप्रयोगः सांमुख्यम्। उपहूतेडेति पश्चादिडाशब्दप्रयोगो विमुखत्वम्। तत्र संमुखत्वेन तुष्टा सती सा देवानुपावर्तत। पशवो वा इडेत्यन्यत्राऽऽम्नातत्वादिडारूपाः पशवस्तत्तदा देवानवृणत वृतवन्तः प्राप्तवन्तः। विमुखत्वेनेडाया अपरितोषात्तद्रूपाः पशवोऽसुरानजहुः संत्यक्तवन्तः॥

तत्र हेयपक्षं विधत्ते—

यं कामयेतापशुः स्यादिति पराचीं तस्ये-
डामुप ह्वयेतापशुरेव भवति, इति॥

उपादेयपक्षं विधत्ते—

यं कामयेत पशुमान्त्स्यादिति प्रतीचीं
तस्येडामुप ह्वयेत पशुमानेव भवति, इति॥

सा नः प्रियेतिमन्त्रभागं व्याख्यातुं प्रस्तौति—

ब्रह्मवादिनो वदन्ति स त्वा इडा-
मुप ह्वयेत य इडामुपहूयाऽऽत्मा-
नमिडायामुप ह्वयेतेति, इति।

वेदार्थविचारका विद्वांसः परस्परमित्याहुः। किमिति, यो बुद्धिमान्मन्त्रेणेड एह्यदित एहीत्यादिनेडामुपहूय तस्यामिडायामात्मानमुपह्वयते योजयति स एवेडां यथाशास्त्रमुपह्वयेतेति॥

( इडानुमन्त्रणम् )

मन्त्रं व्याचष्टे—

सा नः प्रिया सुप्रतूर्तिर्मघोनीत्याहेडामेवो-
पहूयाऽऽत्मानमिडायामुप ह्वयते , इति ।

येयमिडाऽस्माभिरिड एहीत्यादिनोपहूता सेयमिडा त्वं नोऽस्माकं प्रियेत्य-
नेन वचनेन स्वात्मानमिडायां योजितवान्भवति ॥

मार्जनार्थं मनो ज्योतिरित्यादिकामृचं व्याख्यातुं प्रस्तौति—

व्यस्तमिव वा एतद्यज्ञस्य यदिडा सामि प्राश्न-
न्ति सामि मार्जयन्त एतत्प्रति वा असुराणां
यज्ञो व्यच्छिद्यत ब्रह्मणा देवाः समदधुः, इति ।

इडेति यदेतेन यज्ञस्याङ्गं व्यस्तं विच्छिन्नमिव भवति । तत्कथमिति ।
उच्यते—सामि पुरोडाशस्य लेशमिडाभागरूपमृत्विजः प्राश्नन्ति, साम्युदक-
लेशं मार्जयन्ते शिरसि सिञ्चन्ति, तदानीं प्रधानयागाः पूर्वमेव हुता अनूया-
जादियागा इत ऊर्ध्वं यष्टव्यास्तन्मध्ये त्वेतदिडाभक्षणं मार्जनं च क्रियते,
तयोरयागरूपत्वाद्यागविच्छेदकत्वम् । तथा सत्यसुरा यष्टव्याननूयाजादीन्वि-
स्मृतवन्तः । अतोऽसुराणां यज्ञ एतत्प्रति भक्षणमार्जनद्वयं प्रत्येतदीये काले
विच्छिन्नोऽभूत् । देवास्त्वप्रमत्ताः सन्तो ब्रह्मणा परिवृढेन केनचित्पुरुषेण
समदधुस्तयोर्विच्छिन्नयोः पूर्वोत्तरयोर्यज्ञभागयोः संधानं कृतवन्तः ॥

तस्या ऋचस्तृतीयपादं व्याचष्टे—

बृहस्पतिस्तनुतामिमं न इत्याह ब्रह्म वै देवानां
बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सं दधाति , इति ।

देवगुरुत्वाद्बृहस्पतेः परिवृढत्वम् ॥

संधातृप्रतिपादकं तृतीयपादं व्याख्याय संधानप्रतिपादकं द्वितीयपादं
व्याचष्टे—

विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह संतत्यै, इति ।

अविच्छेदायेत्यर्थः ॥

तस्य संततस्य यज्ञस्य देवसमर्पणप्रतिपादकं चतुर्थपादं व्याचष्टे—

विश्वे देवा इह मादयन्तामित्याह संत-
त्यैव यज्ञं देवेभ्योऽनु दिशति , इति ।

ब्रध्न पिन्वस्वेत्यादिकं पुरोडाशाभिमन्त्रणमन्त्रं व्याख्यातुं प्रस्तौति—

**यां वै यज्ञे दक्षिणां ददाति तामस्य पशवोऽनु संक्रामन्ति स एष ईजानोऽपशुर्भावुको यजमानेन खलु वै तत्कार्यमित्याहुर्यथा देवत्रा दत्तं कुर्वीताऽऽत्मन्पशून्रमयेतेति ,** इति ।

यजमानेनर्त्विग्भ्यो दीयमानां गवान्वाहार्यादिरूपां दक्षिणां तदीयाः पशवः सर्वेऽप्यनुगच्छन्ति, तदा यज्ञानुष्ठाता च पशुरहितो भवति । अतः स्वेन दत्तं दक्षिणाद्रव्यं यथा देवत्रा देवेषु ऋत्विक्ष्ववस्थितं भवति, पशवश्च यथा स्वस्मिन्नेव रमन्ते, तथा यजमानेन कर्तव्यमिति बुद्धिमन्त आहुः ॥

मन्त्रस्य प्रथमभागं व्याचष्टे—

**ब्रध्न पिन्वस्वेत्याह यज्ञो वै ब्रध्नो यज्ञमेव तन्महयत्यथो देवत्रैव दत्तं कुरुत आत्मन्पशून्रमयते ,** इति ।

हे यज्ञ प्रीणीहीत्यनेन यज्ञस्य पूजारूपेण प्रोत्साहनेन यथोक्तं प्रयोजनद्वयं संपद्यते ॥

द्वितीयं भागं व्याचष्टे—

**ददतो मे मा क्षायीत्याहाक्षितिमेवोपैति,** इति ।

दानप्रयुक्तो द्रव्यक्षयो मा क्षायीति प्रार्थनेन निवारितो भवति ॥

तृतीयभागं व्याचष्टे—

**कुर्वतो मे मोप दसदित्याह भूमानमेवोपैति ॥,** इति ॥

उपक्षयनिवारणस्य पूर्वमेव प्रार्थितत्वान्मोपदसदित्यनेनाभिवृद्धिलक्षणं बाहुल्यमेव प्रार्थ्यते भूमानमेवोपैतीति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( इडाप्रशंसा )

( अथ प्रथमाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः । )

---

सꣳश्रवा ह सौवर्चनसस्तुमिꣳञ्जमौपोदितिमुवाच यत्सत्रिणाꣳ होताऽभूः कामिडामुपाह्वथा इति तामुपाह्व इति होवाच या प्राणेन देवान्दाधार व्यानेन मनुष्यानपानेन पितॄनिति छिनत्ति सा न छिनत्ती ३ इति छिनत्तीति होवाच शरीरं वा अस्यै तदुपाह्वथा इति होवाच गौर्वै ( १ ) अस्यै शरीरं गां वाव तौ तत्पर्यवदतां या यज्ञे दीयते सा प्राणेन देवान्दाधार यया मनुष्या जीवन्ति सा व्यानेन मनुष्यान्यां पितृभ्यो घ्नन्ति साऽपानेन पितॄन्य एवं वेद पशुमान्भवत्यथ वै तामुपाह्व इति होवाच या प्रजाः प्रभवन्तीः प्रत्याभवतीत्यन्नं वा अस्यै तत् ( २ ) उपाह्वथा इति होवाचौषधयो वा अस्या अन्नमोषधयो वै प्रजाः प्रभवन्तीः प्रत्याभवन्ति य एवं वेदान्नादो भवत्यथ वै तामुपाह्व इति होवाच या प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णातीति प्रतिष्ठां वा अस्यै तदुपाह्वथा इति होवाचेयं वा अस्यै प्रतिष्ठा ( ३ ) इयं वै

प्रजाः परांभवन्तीरनुं गृह्णाति प्रत्याभवंन्तीर्गृ-
ह्णाति य एवं वेद प्रत्येव तिष्ठत्यथ वै तामु-
पाह्व इति होवाच यस्यै निक्रमणे घृतं प्रजाः
संजीवंन्तीः पिबन्तीति छिनत्ति सा न छिन-
त्ती ३ इति न छिनत्तीति होवाच प्र तु जंन-
यतीत्येष वा इडामुपाह्वथा इति होवाच वृष्टि-
र्वा इडा वृष्ट्यै वै निक्रमंणे घृतं प्रजाः संजी-
वंन्तीः पिबन्ति य एवं वेद प्रैव जायतेऽन्नादो
भंवति ( ४ ) ॥

( गौर्वा अस्यैतत्प्रतिष्ठाऽह्वथा इति विंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः । )

---

सꣳश्रवा इति सं—श्रवाः । ह । सौवर्चनसः ।
तुमिञ्जम् । औपोदितिमित्यौप—उदितिम् । उवाच ।
यत् । सत्रिणाम् । होता । अभूः । काम् । इडाम् ।
उपेति । अह्वथाः । इति । ताम् । उपेति । अह्वे ।
इति । ह । उवाच । या । प्राणेनेति प्र—अनेन ।
देवान् । दाधार । व्यानेनेति वि—अनेन । मनु-

( इडाप्रशंसा )

ष्यान् । अपानेनेत्यप—अनेन । पितृन् । इति । छिनत्ति । सा । न । छिनत्ती३ । इति । छिनत्ति । इति । ह । उवाच । शरीरम् । वै । अस्यै । तत् । उपेति । अह्वथाः । इति । ह । उवाच । गौः । वै । ( १ ) अस्यै । शरीरम् । गाम् । वाव । तौ । तत् । परीति । अवदताम् । या । यज्ञे । दीयते । सा । प्राणेनेति प्र—अनेन । देवान् । दाधार । यया । मनुष्याः । जीवन्ति । सा । व्यानेनेति वि—अनेन । मनुष्यान् । याम् । पितृभ्य इति पितृ—भ्यः । घ्नन्ति । सा । अपानेनेत्यप—अनेन । पितृन् । यः । एवम् । वेद । पशुमानिति पशु—मान् । भवति । अथ । वै । ताम् । उपेति । अह्वे । इति । ह । उवाच । या । प्रजा इति प्र—जाः । प्रभवन्तीरिति प्र—भवन्तीः । प्रतीति । आभवतीत्या—भवति । इति । अन्नम् । वै । अस्यै । तत् । ( २ ) उपेति । अह्वथाः । इति । ह । उवाच । ओषधयः । वै । अस्याः । अन्नम् । ओष-धयः । वै । प्रजा इति प्र—जाः । प्रभवन्तीरिति प्र—भवन्तीः । प्रति । एति । भवन्ति । यः । एवम् । वेद । अन्नाद इत्यन्न—अदः । भवति । अथ । वै । ताम् । उपेति । अह्वे । इति । ह । उवाच । या ।

प्रजा इति॑ प्र—जाः । प॒रा॒भवं॑न्ती॒रिति॑ परा—भवं॑न्तीः । अ॒नु॒गृ॒ह्णा॒तीत्य॑नु—गृ॒ह्णाति॑ । प्रतीति॑ । आ॒भवं॑न्ती॒रित्या॑—भवं॑न्तीः । गृ॒ह्णाति॑ । इति॑ । प्र॒ति॒ष्ठामिति॑ प्रति—स्थाम् । वै । अ॒स्यै॒ । तत् । उपेति॑ । अ॒ह्व॒थाः॒ । इति॑ । ह॒ । उ॒वा॒च॒ । इ॒यम् । वै । अ॒स्यै॒ । प्र॒ति॒ष्ठेति॑ प्रति—स्था । ( ३ ) इ॒यम् । वै । प्र॒जा इति॑ प्र—जाः । प॒रा॒भवं॑न्ती॒रिति॑ परा—भवं॑न्तीः । अ॒न्विति॑ । गृ॒ह्णा॒ति॒ । प्रतीति॑ । आ॒भवं॑न्ती॒रित्या॑—भवं॑न्तीः । गृ॒ह्णा॒ति॒ । यः । ए॒वम् । वेद॑ । प्रतीति॑ । ए॒व । ति॒ष्ठ॒ति॒ । अथ॑ । वै । ताम् । उपेति॑ । अ॒ह्व॒ । इति॑ । ह॒ । उ॒वा॒च॒ । यस्यै॑ । नि॒क्रम॑ण॒ इति॑ नि—क्रम॑णे । घृ॒तम् । प्र॒जा इति॑ प्र—जाः । स॒ञ्जीवं॑न्ती॒रिति॑ सं—जीवं॑न्तीः । पिबं॑न्ति । इति॑ । छि॒नत्ति॑ । सा । न । छि॒नत्ती३ । इति॑ । न । छि॒न॒त्ति॒ । इति॑ । ह॒ । उ॒वा॒च॒ । प्रेति॑ । तु । ज॒न॒य॒ति॒ । इति॑ । ए॒षः । वै । इडा॑म् । उपेति॑ । अ॒ह्व॒थाः॒ । इति॑ । ह॒ । उ॒वा॒च॒ । वृ॒ष्टिः॑ । वै । इडा॑ । वृ॒ष्ट्यै॑ । वै । नि॒क्रम॑ण॒ इति॑ नि—क्रम॑णे । घृ॒तम् । प्र॒जा इति॑ प्र—जाः । स॒ञ्जीवं॑न्ती॒रिति॑ सं—जीवं॑न्तीः । पि॒ब॒न्ति॒ । यः । ए॒वम् । वेद॑ ।

(इडाप्रशंसा)

प्रेति। एव। जायते। अन्नाद इत्यन्न—अदः। भवति (४)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

(अथ प्रथमकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः।)

---

इडाद्यनुमन्त्रणमन्त्राः प्रथमे व्याख्याताः। तामिडां द्वितीये द्वयोर्मुन्योः प्रश्नोत्तराभ्यां प्रशंसति। तत्र प्रश्नमवतारयति—

सꣳश्रवा ह सौवर्चनसस्तुमिञ्जमौपोदितिमुवाच, इति।

संश्रवा इत्यृषेर्नामधेयम्। स च सुवर्चनसः पुत्रः। तुमिञ्ज इत्यृष्यन्तरस्य नामधेयम्। स चोपोदितस्य पुत्रः॥

संश्रवसः प्रश्नं दर्शयति—

यत्सत्रिणाꣳ होताऽभूः कामिडामुपाह्वथा इति, इति।

यद्यदा, तदेत्यध्याहारः। कां किंगुणकाम्॥

तुमिञ्जस्योत्तरं दर्शयति—

तामुपाह्व इति होवाच या प्राणेन देवान्दाधार व्यानेन मनुष्यानपानेन पितॄनिति, इति।

प्राणादिवृत्तिभिरिडाया देवादिधारणमुत्तरत्र स्पष्टी करिष्यते। तां देवादिधारणगुणकामिडामुपहूतवानस्मि॥

पुनः प्रश्नं दर्शयति—

छिनत्ति सा न छिनत्ती३ इति, इति।

त्वयोपहूता सेयमिडा गोरूपा सती दक्षिणात्वेन प्रतिग्रहीतॄन्किं छिनत्ति प्रतिग्रहदोषेण विनाशयत्यथ वा न च्छिनत्तीति विचारार्थः प्लुतः॥

उत्तरं दर्शयति—

छिनत्तीति होवाच, इति।

---

१ ख. घ. ङ. च. °नास्ति। वि°।

एवं तर्हि नेयं मुख्येडेति प्रश्नवादिनोक्तं दूषणं दर्शयति—

शरीरं वा अस्यै तदुपाह्वथा इति होवाच, इति।

अस्या इडादेवतायाः शरीरमेव त्वयोपहूतं न तु सा देवता ॥

इदानीमाख्यायिकातोऽपसृत्य श्रुतिः स्वयमेवाऽऽह—

गौर्वा अस्यै शरीरं गां वाव तौ तत्पर्यवदताम्, इति।

गौरेवास्या इडायाः शरीरम्। एतच्च मानवी घृतपदी मैत्रावरुणीत्येतस्य हौत्रस्येडोपाह्वानमन्त्रस्य ब्राह्मणे मनुः पृथिव्या इत्याद्यनुवाके प्रसिद्धम्। अत इडायाः शरीरभूतां गामेव ज्ञातवन्तौ तदानीं छिनत्तीत्येतादृशाभ्यां प्रश्नोत्तराभ्यामनिन्दताम् ॥

इदानीं देवादिधारणं स्पष्टी करोति—

या यज्ञे दीयते सा प्राणेन देवान्दाधार यया मनुष्या जीवन्ति सा व्यानेन मनुष्यान्यां पितृभ्यो घ्नन्ति साऽपानेन पितॄन्, इति।

यज्ञे दक्षिणारूपेण दत्तया गवा देवास्तूष्णीमेव तुष्यन्ति न तु तां दुहन्ति नापि घ्नन्ति। अतः प्राणेन प्रकृष्टचेष्टयोत्तमया वृत्त्या देवान्धारयति। मनुष्यास्तु गां दुग्ध्वा जीवन्ति, तदा नात्यन्तमहानिः क्षीरस्य हीनत्वात्। नाप्यत्यन्तं हानिः शरीरस्य वधाभावात्। अतः प्राणापानमध्यवर्तिन्या व्यानसमानया मध्यमवृत्त्या मनुष्यान्धारयति। अष्टकाश्राद्धे गां पितृभ्यो घ्नन्ति। तथा चाऽऽपस्तम्बः—"श्वोभूते दर्भेण गामुपाकरोति पितृभ्यस्त्वा जुष्टामुपाकरोमि" इति। सेयं गौरपानेनाधमवृत्त्या मारणरूपया पितॄन्धारयति ॥

उक्तस्य देवादिधारणस्य वेदनं प्रशंसति—

य एवं वेद पशुमान्भवति, इति ॥

अथ तुमिञ्जः स्वेनोपहूताया इडाया मुख्यत्वं संपादयितुं गुणान्तरेणेडां विशिनष्टीति दर्शयति—

अथ वै तामुपाह्व इति होवाच या प्रजाः प्रभवन्तीः प्रत्या भवतीति, इति।

पक्षान्तरद्योतनायाथ वा इति पदद्वयम्। येयमिडा प्रभुत्वोपेताः प्रजाः प्रत्याभिमुख्येन वर्तते तादृशीमिडामुपहूतवानस्मि ॥

(इडाप्रशंसा)

संश्रवा एतस्या अपीडाया मुख्यत्वं वारयतीति दर्शयति—

अन्नं वा अस्यै तदुपाह्वथा इति होवाच, इति।

अस्या इडायाः संबन्धि यदन्नं तदेवोपहूतवानसि न तु मुख्यामिडाम् ॥

तदेतद्वेद उपपादयति—

ओषधयो वा अस्या अन्नमोषधयो वै
प्रजाः प्रभवन्तीः प्रत्या भवन्ति, इति।

ओषधीनां गवामन्नत्वं प्रसिद्धम्। प्रभुत्वोपेतानां च प्रजानां गृहेषु बहुजनभोजनाय व्रीह्याद्योषधय आगत्य वर्तन्ते ॥

एतद्वेदनं प्रशंसति—

य एवं वेदान्नादो भवति, इति ॥

पुनरपि तुमिञ्जस्य गुणान्तरोक्तिमिडाया मुख्यत्वसंपादिकामुदाहरति—

अथ वै तामुपाह्व इति होवाच या प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णातीति, इति।

येयमिडा व्याध्यादिभिः पराभूयमानाः प्रजाः स्वस्यामवस्थाप्यानुगृह्णाति, पराभूयमानाः प्रजास्तत्तदपेक्षितस्थानप्रदानेन स्वी करोति ॥

अस्या अपीडाया मुख्यत्वनिराकरणोक्तिं दर्शयति—

प्रतिष्ठां वा अस्यै तदुपाह्वथा इति होवाच, इति।

प्रतितिष्ठत्यस्यामिडा गोरूपेति प्रतिष्ठा भूमिस्तामेवोपहूतवानसि न मुख्यामिडाम् ॥

तदेतद्वेद उपपादयति—

इयं वा अस्यै प्रतिष्ठेयं वै प्रजाः पराभवन्तीरनु गृह्णाति प्रत्याभवन्तीर्गृह्णाति, इति ॥

वेदनं प्रशंसति—

य एवं वेद प्रत्येव तिष्ठति, इति।

मुख्यत्वसंपादनाय गुणान्तरोक्तिं दर्शयति—

अथ वै तामुपाह्व इति होवाच यस्यै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्तीति, इति।

यस्या वृष्टिरूपाया इडाया निक्रमणे न्यग्भावेन पतने सति यद्घृतं क्षरदुदकं तज्जीवनार्थिन्यः प्रजा उपजीवन्ति तादृशीमिडामुपहूतवानस्मि ॥

संश्रवा अस्यामिडायां पूर्ववद्दोषभावाभावौ पृच्छति—

छिनत्ति सा न छिनत्ती३ इति, इति ॥

वृष्टेर्गवान्नभूमीनामिव प्रतिग्राह्यद्रव्यत्वाभावात्तुमिञ्जस्य प्रतिग्रहदोषाभावोक्ति गुणान्तरोक्ति च दर्शयति—

न छिनत्तीति होवाच प्र तु जनयतीति, इति ।

वृष्टिरूपेयमिडा कमपि पुरुषं न च्छिनत्ति न दूषयति किं तु प्रकर्षेण सस्यादिकं जनयति ॥

संश्रवसो मुख्येडात्वाङ्गीकारोक्ति दर्शयति—

एष वा इडामुपाह्वथा इति होवाच, इति ।

एष वृष्टिरूपेडावादी त्वमेव मुख्यामिडामुपहूतवानसि ॥

एतस्यामुक्तायामिडायां पूर्वोक्तलक्षणं वेदो दर्शयति—

वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्ति य एवं वेद प्रैव जायतेऽन्नादो भवति॥, इति ॥

तदेवमस्मिन्ननुवाके सर्वप्राण्युपकारिभिर्गवान्नभूमिवृष्टिरूपैरियमिडा प्रशस्ता॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ प्रथमाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः ।

---

परोक्षं वा अन्ये देवा इज्यन्ते प्रत्यक्षमन्ये यद्यजते य एव देवाः परोक्षमिज्यन्ते तानेव तद्यजति यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षं यद्ब्राह्मणास्तानेव तेन प्रीणात्यथो दक्षिणैवास्यैषाऽथो यज्ञस्यैव छिद्रमपि दधाति यद्वै यज्ञस्य क्रूरं यद्विलिष्टं तदन्वाहार्येण ( १ )

( अन्वाहार्याभिधानम् )

अन्वाहरति तदन्वाहार्यस्यान्वाहार्यत्वं देवदूता वा एते यदृत्विजो यदन्वाहार्यमाहरति देवदूतानेव प्रीणाति प्रजापतिर्देवेभ्यो यज्ञान्व्यादिश्य स रिरिचानोऽमन्यत स एतमन्वाहार्यमभक्तमपश्यत्तमात्मन्नधत्त स वा एष प्राजापत्यो यदन्वाहार्यो यस्यैवं विदुषोऽन्वाहार्य आह्रियते साक्षादेव प्रजापतिमृध्नोत्यपरिमितो निरुप्योऽपरिमितः प्रजापतिः प्रजापतेः ( २ ) आप्त्यै देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं प्राजापत्यमन्वाहार्यमपश्यन्तमन्वाहरन्त ततो देवा अभवन्पराऽसुरा यस्यैवं विदुषोऽन्वाहार्य आह्रियते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति यज्ञेन वा इष्टी पक्वेन पूर्ती यस्यैवं विदुषोऽन्वाहार्य आह्रियते स त्वेवेष्टापूर्ती प्रजापतेर्भागोऽसि ( ३ ) इत्याह प्रजापतिमेव भागधेयेन समर्धयत्यूर्जस्वान्पयस्वानित्याहोर्जमेवास्मिन्पयो दधाति प्राणापानौ मे पाहि समानव्यानौ मे पाहीत्याहाऽऽशिषमेवैतामा शास्तेऽक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोक इत्याह क्षीयते वा

अमुष्मिँल्लोकेऽन्नमितःप्रदानꣳ ह्यमुष्मिँल्लोके प्रजा उपजीवन्ति यदेवमभिमृशत्यक्षितिमेवै-नत्द्गमयति नास्यामुष्मिँल्लोकेऽन्नं क्षीयते (४) ॥

( अन्वाहार्येण प्रजापतेरसि ह्यमुष्मिँल्लोके पञ्चदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः । )

---

परोक्षमिति परः—अक्षम् । वै । अन्ये । देवाः । इज्यन्ते । प्रत्यक्षमिति प्रति—अक्षम् । अन्ये । यत् । यजते । ये । एव । देवाः । परोक्षमिति परः—अक्ष-म् । इज्यन्ते । तान् । एव । तत् । यजति । यत् । अन्वाहार्यमित्यनु—आहार्यम् । आहरतीत्या—हरति । एते । वै । देवाः । प्रत्यक्षमिति प्रति—अक्षम् । यत् । ब्राह्मणाः । तान् । एव । तेन । प्रीणाति । अथो इति । दक्षिणा । एव । अस्य । एषा । अथो इति । यज्ञस्य । एव । छिद्रम् । अपीति । दधाति । यत् । वै । यज्ञस्य । क्रूरम् । यत् । विलिष्टमिति वि—लि-ष्टम् । तत् । अन्वाहार्येणेत्यनु—आहार्येण । ( १ ) अन्वाहरतीत्यनु—आहरति । तत् । अन्वाहार्यस्ये-त्यनु—आहार्यस्य । अन्वाहार्यत्वमित्यन्वाहार्य—

त्वम् । देवदूता इति देव—दूताः । वै । एते । यत् । ऋत्विजः । यत् । अन्वाहार्यमित्यनु—आहार्यम् । आहरतीत्या—हरति । देवदूतानिति देव—दूतान् । एव । प्रीणाति । प्रजापतिरिति प्रजा—पतिः । देवेभ्यः । यज्ञान् । व्यादिशदिति वि—आदिशत् । सः । रिरिचानः । अमन्यत । सः । एतम् । अन्वाहार्यमित्यनु—आहार्यम् । अभक्तम् । अपश्यत् । तम् । आत्मन् । अधत्त । सः । वै । एषः । प्राजापत्य इति प्राजा—पत्यः । यत् । अन्वाहार्य इत्यनु—आहार्यः । यस्य । एवम् । विदुषः । अन्वाहार्य इत्यनु—आहार्यः । आह्रियत इत्या—ह्रियते । साक्षादिति स—अक्षात् । एव । प्रजापतिमिति प्रजा—पतिम् । ऋध्नोति । अपरिमित इत्यपरि—मितः । निरुप्य इति निः—उप्य । अपरिमित इत्यपरि—मितः । प्रजापतिरिति प्रजा—पतिः । प्रजापतेरिति प्रजा—पतेः । ( २ ) आप्त्यै । देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । एतम् । प्राजापत्यमिति प्राजा—पत्यम् । अन्वाहार्यमित्यनु—आहार्यम् । अपश्यन् । तम् । अन्वाहरन्तेत्यनु—आहरन्त ।

ततः । देवाः । अभवन् । परेति । असुराः । यस्य । एवम् । विदुषः । अन्वाहार्य इत्यनु—आहार्यः । आह्रियत इत्या—ह्रियते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । यज्ञेन । वै । इष्टी । पक्केन । पूर्ती । यस्य । एवम् । विदुषः । अन्वाहार्य इत्यनु—आहार्यः । आह्रियत इत्या—ह्रियते । सः । तु । एव । इष्टापूर्तीतीष्ट—पूर्ती । प्रजापतेरिति प्रजा—पतेः । भागः । असि । ( ३ ) इति । आह । प्रजापतिमिति प्रजा—पतिम् । एव । भागधेयेनेति भाग—धेयेन । समिति । अर्धयति । ऊर्जस्वान् । पयस्वान् । इति । आह । ऊर्जम् । एव । अस्मिन् । पयः । दधाति । प्राणापानाविति प्राण—अपानौ । मे । पाहि । समानव्यानाविति समान—व्यानौ । मे । पाहि । इति । आह । आशिषमित्या—शिषम् । एव । एताम् । एति । शास्ते । अक्षितः । असि । अक्षित्यै । त्वा । मा । मे । क्षेष्ठाः । अमुत्र । अमुष्मिन् । लोके । इति । आह । क्षीयते । वै । अमुष्मिन् । लोके । अन्नम् । इतःप्रदानमितीतः—प्रदानम् । हि । अमुष्मिन् । लोके । प्रजा इति प्र—जाः । उपजीवन्तीत्युप—जी-

(अन्वाहार्याभिधानम्)

वन्ति। यत्। एवम्। अभिमृशतीत्यभि-मृशति।
अक्षितिम्। एव। एनत्। गमयति। न। अस्य।
अमुष्मिन्। लोके। अन्नम्। क्षीयते (४)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

(अथ प्रथमकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः।)

---

द्वितीय इडायाः प्रशंसोक्ता। तृतीयेऽन्वाहार्य उच्यते। तस्य दानं विधातुं प्रस्तौति—

परोक्षं वा अन्ये देवा इज्यन्ते प्रत्यक्ष-
मन्ये यद्यजते य एव देवाः परो-
क्षमिज्यन्ते तानेव तद्यजति, इति।

परोक्षमिति क्रियाविशेषणम्। अग्नीन्द्रादीनामदृश्यमानत्वात्तद्यागः परोक्षः। ऋत्विजां दृश्यमानत्वात्तद्यागः प्रत्यक्षः॥

अन्वाहार्यदानं विधत्ते—

यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षं
यद्ब्राह्मणास्तानेव तेन प्रीणाति, इति।

अन्वाहार्यः पक्व ओदनस्तमाहरत्यृत्विग्भ्यो दद्यात्। प्रत्यक्षं वर्तन्त इति शेषः॥

अन्वाहार्यस्य दक्षिणारूपत्वेन यज्ञच्छिद्रपिधायकत्वेन च तं प्रशंसति—

अथो दक्षिणैवास्यैषाऽथो यज्ञ-
स्यैव छिद्रमपि दधाति, इति॥

अन्वाहार्यशब्दं निर्वक्ति—

यद्वै यज्ञस्य क्रूरं यद्विलिष्टं तदन्वाहार्येणा-
न्वाहरति तदन्वाहार्यस्यान्वाहार्यत्वम्, इति।

अतिरिक्तं कर्मणो यच्च हीनमित्यस्मिन्प्रायश्चित्ताहुतिमन्त्रे प्रोक्तमधिकं यज्ञाङ्गमत्र क्रूरं, न्यूनं विलिष्टं, तदुभयमनेनान्वाहार्यदानेनानुकूलं यथा भवति तथाऽऽहरति समादधाति। तस्मादन्वाहार्यत आनुकूल्येन समाधीयतेऽनेनेत्यन्वाहार्यः ॥

ऋत्विक्प्रीतिहेतुत्वेन पुनः प्रशंसति—

देवदूता वा एते यदृत्विजो यदन्वाहार्यमाहरति देवदूतानेव प्रीणाति, इति ॥

प्रजापतिभागत्वेन पुनस्तं प्रशंसति—

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्स रिरिचानोऽमन्यत स एतमन्वाहार्यमभक्तमपश्यत्तमात्मन्नधत्त स वा एष प्राजापत्यो यदन्वाहार्यो यस्यैवं विदुषोऽन्वाहार्य आह्रियते साक्षादेव प्रजापतिमृध्नोति, इति।

आग्नेयाग्नीषोमीयपुरोडाशान्यागानग्न्यादिदेवेभ्यो विभज्य दत्त्वा स्वकीययागराहित्येन रिक्तमात्मानं मन्यमानः प्रजापतिरभक्तं देवेभ्यो विभज्यासमर्पितं दृष्ट्वा तमात्मनि स्थापितवान्। ततोऽन्वाहार्यः प्राजापत्यः ॥

तस्यान्वाहार्यस्य बाहुल्यसंपादनं विधत्ते—

अपरिमितो निरुप्योऽपरिमितः प्रजापतिः प्रजापतेराप्त्यै, इति।

सर्वदेवस्वामित्वेन व्याप्तिबाहुल्यात्प्रजापतेरपरिमितत्वम् ॥

स्वविजयहेतुत्वेन वैरिपराजयहेतुत्वेन च पुनः प्रशंसति—

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं प्राजापत्यमन्वाहार्यमपश्यन्तमन्वाहरन्त ततो देवा अभवन्पराऽसुरा यस्यैवं विदुषोऽन्वाहार्य आह्रियते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति, इति।

( अन्वाहार्याभिधानम् )

इष्टापूर्तकारित्वपूरणेन च पुनः प्रशंसति—

यज्ञेन वा इष्टी पक्केन पूर्ती यस्यैवं विदु-
षोऽन्वाहार्य आह्रियते स त्वेवेष्टापूर्ती, इति।

इष्टमाग्नेयादि श्रौतकर्म। पूर्तं वापीकूपादि स्मार्तकर्म। तत्राऽऽग्नेयादियागे-नेष्टसंपत्तिः। पक्केनान्वाहार्येण पूर्तसंपत्तिः॥

तस्याभिमर्शनमन्त्रप्रथमभागं व्याचष्टे—

प्रजापतेर्भागोऽसीत्याह प्रजापति-
मेव भागधेयेन समर्धयति, इति॥

द्वितीयभागं व्याचष्टे—

ऊर्जस्वान्पयस्वानित्याहोर्जमेवास्मिन्पयो दधाति, इति॥

तृतीयभागं व्याचष्टे—

प्राणापानौ मे पाहि समानव्यानौ मे
पाहीत्याहाऽऽशिषमेवैतामा शास्ते, इति।

ऋत्विग्भिरन्वाहार्यस्य नीयमानत्वात्तेन स्वकीयप्राणादिपालनमाशीर्वाद एव॥

चतुर्थभागं व्याकुर्वन्नभिमर्शनं विधत्ते—

अक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामु-
ष्मिँल्लोक इत्याह क्षीयते वा अमुष्मिँल्लोकेऽन्न-
मितःप्रदानꣳ ह्यमुष्मिँल्लोके प्रजा उप-
जीवन्ति यदेवमभिमृशत्यक्षितिमेवैनद्गम-
यति नास्यामुष्मिँल्लोकेऽन्नं क्षीयते॥, इति॥

स्वर्गस्य कर्मभूमित्वाभावान्न तत्साधनानुष्ठानेनान्नं संपादयितुं शक्यं, किंतु स्वर्गप्राप्ताः प्रजा इतःप्रदानमेतल्लोकानुष्ठितकर्मसंपादितमेवान्नं स्वर्गे लोक उपजीवन्ति। तस्मात्तत्र भुज्यमानमिदं क्षीयते। अक्षितोऽसीति मन्त्रेण यदभि-मर्शनं तेनान्नस्याक्षयत्वप्रापणादन्नं न स्वर्गे क्षीयते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके
तृतीयोऽनुवाकः॥ ३॥

(अथ प्रथमाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः ।)

बर्हिषोऽहं देवयज्यया प्रजावान्भूयासमित्याह बर्हिषा वै प्रजापतिः प्रजा असृजत तेनैव प्रजाः सृजते नराशंसस्याहं देवयज्यया पशुमान्भूयासमित्याह नराशंसेन वै प्रजापतिः पशूनसृजत तेनैव पशून्त्सृजतेऽग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयमित्याहाऽऽयुरेवाऽऽत्मन्धत्ते प्रति यज्ञेन तिष्ठति दर्शपूर्णमासयोः (१) वै देवा उज्जितिमनूदजयन्दर्शपूर्णमासाभ्यामसुरानपानुदन्ताग्नेरहमुज्जितिमनूज्जेषमित्याह दर्शपूर्णमासयोरेव देवतानां यजमान उज्जितिमनूज्जयति दर्शपूर्णमासाभ्यां भ्रातृव्यानप नुदते वाजवतीभ्यां व्यूहत्यन्नं वै वाजोऽन्नमेवाव रुन्धे द्वाभ्यां प्रतिष्ठित्यै यो वै यज्ञस्य द्वौ दोहौ विद्वान्यजत उभयतः (२) एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्चैष वा अन्यो यज्ञस्य दोह इडायामन्यो यर्हि होता यजमानस्य नाम गृह्णीयात्तर्हि ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति सꣳस्तुता एव देवता दुहेऽथो

उभयत एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्च रोहितेन त्वाऽग्निर्देवतां गमयत्वित्याहैते वै देवाश्वाः ( ३ ) यजमानः प्रस्तरो यदेतैः प्रस्तरं प्रहरति देवाश्वैरेव यजमानꣳ सुवर्गं लोकं गमयति वि ते मुञ्चामि रशना वि रश्मीनित्याहैष वा अग्नेर्विमोकस्तेनैवैनं वि मुञ्चति विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमित्याह यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रति तिष्ठति सोमस्याहं देवयज्यया सुरेताः ( ४ ) रेतो धिषीयेत्याह सोमो वै रेतोधास्तेनैव रेत आत्मन्धत्ते त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयमित्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्तेनैव पशूनाꣳ रूपमात्मन्धत्ते देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्र भूयासमित्याहैतस्माद्वै मिथुनात्प्रजापतिर्मिथुनेन ( ५ ) प्राजायत तस्मादेव यजमानो मिथुनेन प्र जायते वेदोऽसि वित्तिरसि विदेयेत्याह वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वं यद्यद्भ्रातृव्यस्याभिध्यायेत्तस्य नाम गृह्णीयात्तदेवास्य सर्वं

वृङ्क्ते घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनमित्याह प्र सहस्रं पशूनाप्नोत्याऽस्य प्रजायां वाजी जायते य एवं वेद ( ६ ) ॥

( दर्शपूर्णमासयोरुभयतो देवाश्वाः सुरेताः प्रजापतिर्मिथुनेनाऽऽप्नोत्यष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः । )

---

बर्हिषः । अहम् । देवयज्ययेति देव—यज्यया । प्रजावानिति प्रजा—वान् । भूयासम् । इति । आह । बर्हिषा । वै । प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—जाः । असृजत । तेन । एव । प्रजा इति प्र—जाः । सृजते । नराशꣳसस्य । अहम् । देवयज्ययेति देव—यज्यया । पशुमानिति पशु—मान् । भूयासम् । इति । आह । नराशꣳसेन । वै । प्रजापतिरिति प्रजा—पतिः । पशून् । असृजत । तेन । एव । पशून् । सृजते । अग्नेः । स्विष्टकृत इति स्विष्ट—कृतः । अहम् । देवयज्ययेति देव—यज्यया । आयुष्मान् । यज्ञेन । प्रतिष्ठामिति प्रति—स्थाम् ।

गमेयम् । इति । आह । आयुः । एव । आत्मन् ।
धत्ते । प्रतीति । यज्ञेन । तिष्ठति । दर्शपूर्णमासयो-
रिति दर्श—पूर्णमासयोः । ( १ ) वै । देवाः ।
उज्जितिमित्युत्—जितिम् । अनु । उदिति । अज-
यन् । दर्शपूर्णमासाभ्यामिति दर्श—पूर्णमासाभ्याम् ।
असुरान् । अपेति । अनुदन्त । अग्नेः । अहम् ।
उज्जितिमित्युत्—जितिम् । अनु । उदिति ।
जेषम् । इति । आह । दर्शपूर्णमासयोरिति दर्श—
पूर्णमासयोः । एव । देवतानाम् । यजमानः । उज्जि-
तिमित्युत्—जितिम् । अनु । उदिति । जयति ।
दर्शपूर्णमासाभ्यामिति दर्श—पूर्णमासाभ्याम् । भ्रातृ-
व्यान् । अपेति । नुदते । वाजवतीभ्यामिति वाज—
वतीभ्याम् । वीति । ऊहति । अन्नम् । वै । वाजः ।
अन्नम् । एव । अवेति । रुन्धे । द्वाभ्याम् । प्रति-
ष्ठित्या इति प्रति—स्थित्यै । यः । वै । यज्ञस्य । द्वौ ।
दोहौ । विद्वान् । यजते । उभयतः । ( २ ) एव ।
यज्ञम् । दुहे । पुरस्तात् । च । उपरिष्टात् । च ।
एषः । वै । अन्यः । यज्ञस्य । दोहः । इडायाम् ।
अन्यः । यर्हि । होता । यजमानस्य । नाम । गृह्णी-
यात् । तर्हि । ब्रूयात् । एति । इमाः । अग्मन् ।

आशिष इत्या—शिषः । दोहकामा इति दोह—कामाः । इति । सꣳस्तुता इति सं—स्तुताः । एव । देवताः । दुहे । अथो इति । उभयतः । एव । यज्ञम् । दुहे । पुरस्तात् । च । उपरिष्टात् । च । रोहितेन । त्वा । अग्निः । देवताम् । गमयतु । इति । आह । एते । वै । देवाश्वा इति देव—अश्वाः । ( ३ ) यजमानः । प्रस्तर इति प्र—स्तरः । यत् । एतैः । प्रस्तरमिति प्र—स्तरम् । प्रहरतीति प्र—हरति । देवाश्वैरिति देव—अश्वैः । एव । यजमानम् । सुवर्गमिति सुवः—गम् । लोकम् । गमयति । वीति । ते । मुञ्चामि । रशनाः । वीति । रश्मीन् । इति । आह । एषः । वै । अग्नेः । विमोक इति वि—मोकः । तेन । एव । एनम् । वीति । मुञ्चति । विष्णोः । शंयोरिति शं—योः । अहम् । देवयज्ययेति देव—यज्यया । यज्ञेन । प्रतिष्ठामिति प्रति—स्थाम् । गमेयम् । इति । आह । यज्ञः । वै । विष्णुः । यज्ञे । एव । अन्ततः । प्रतीति । तिष्ठति । सोमस्य । अहम् । देवयज्ययेति देव—यज्यया । सुरेता इति सु—रेताः । ( ४ ) रेतः । धिषीय । इति । आह । सोमः । वै । रेतोधा इति रेतः—धाः । तेन । एव । रेतः । आत्मन् ।

आनन्तर्यात्प्रकरणात्कर्माङ्गं षोडशिन्यदः ।
ऊर्ध्वंपात्रे खादिरेऽग्रे संयुज्यान्वेति कर्मणा ॥
यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः ।
सौमिकत्वाद्वाजपेये यूपो नास्ति पशुं विना ॥"

वाजपेयप्रकरणे श्रूयते—" सप्तदशारत्निर्वाजपेयस्य यूपो भवति " इति । अत्र यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेयकर्मणोऽङ्गं, सप्तदशारत्निशब्दवाजपेयशब्दयोरानन्तर्यात् । प्रकरणं चैवमनुगृह्यते । यदि कर्मणः साक्षादूर्ध्वमानं न संभवेत्तर्हि वाजपेयगतं खादिरमूर्ध्वं यत्षोडशिपात्रं तस्मिन्नद उन्मानं संबध्य तद्द्वारा कर्मणाऽन्वेतीति प्राप्ते ब्रूमः—सप्तदशारत्निर्यूप इति सामानाधिकरण्याद्यूपेन साक्षात्संबध्यते । तस्य च यूपस्य पश्वङ्गत्वादुन्मानं यूपद्वारा पशोरङ्गं भवति । तस्यापि पशोर्वाजपेयाङ्गत्वात्पशुद्वारा कर्मणोऽङ्गम् । यद्यपि वाजपेययूपशब्दयोरानन्तर्यमस्ति तथाऽपि वाजपेयस्य सोमयागतया साक्षाद्यूपसंबन्धाभावात्पशुव्यवधानमभ्युपेयम् । वाजपेयस्येति षष्ठ्याः संबन्धमात्रवाचित्वेन व्यवहितसंबन्धमप्यसावभिधत्ते, देवदत्तस्य नप्तेति प्रयोगवत् । यत्सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यं यच्च प्रकरणं तदुभयं न विरुद्धं, पश्वङ्गत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात् । किं च पूर्वपक्षे यूपशब्देन षोडशिपात्रं लक्षणीयम् । सिद्धान्ते तु नासौ दोषः ॥

तत्रैवाष्टमपादे चिन्तितम्—

" वाचयेत्स्वामिनं ज्ञाज्ञौ वाचनीयो ज्ञ एव वा ।
अविशेषादुभौ ज्ञस्य स्वामित्वाद्वाचयेदमुम् ॥ "

वाजपेये श्रूयते—" क्लृप्तीर्यजमानं वाचयति " इति । आयुर्यज्ञेन कल्पतामित्यादयो मन्त्राः क्लृप्तयः । तत्र मन्त्रतदर्थाभिज्ञमनभिज्ञं चोभावपि वाचयेत्, विद्वांसं वाचयेदित्येवं विशेषस्याश्रवणात्, अनभिज्ञं तदैव शिक्षयित्वाऽपि वाचयितुं शक्यत्वादिति चेन्मैवम् । अध्ययनविधिबलादधीतवेदस्य विदितवेदार्थस्यैव यजमानत्वात् । तस्मादभिज्ञमेव वाचयेत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

---

१ क. घ. ङ. च. °भयमवि° । °णा ।